### पञ्चमः खण्डः

जयन्तः पाराशर्यः श्यामजयन्ताय लौहित्याय ॥ १ ॥
श्यामजयन्तो लौहित्यः पल्लिगुप्ताय लौहित्याय ॥ २ ॥
पल्लिगुप्तो लौहित्यः सत्यश्रवसे लौहित्याय ॥ ३ ॥
सत्यश्रवा लौहित्यः कृष्णधृतये सात्यकये ॥ ४ ॥ 5
कृष्णधृतिः सात्यकिः श्यामसुजयन्ताय लौहित्याय ॥ ५ ॥
श्यामसुजयन्तो लौहित्यः कृष्णदत्ताय लौहित्याय ॥ ६ ॥
कृष्णदत्तो लौहित्यो मित्रभूतये लौहित्याय ॥ ७ ॥
मित्रभूतिर् लौहित्यः श्यामजयन्ताय लौहित्याय ॥ ८ ॥
श्यामजयन्तो लौहित्यः त्रिवेदाय कृष्णराताय लौहित्याय ॥ ९ ॥ 10
त्रिवेदः कृष्णरातो लौहित्यो यशस्विने जयन्ताय लौहित्याय ॥ १० ॥
यशस्वी जयन्तो लौहित्यो जयकाय लौहित्याय ॥ ११ ॥
जयको लौहित्यः कृष्णराताय लौहित्याय ॥ १२ ॥
कृष्णरातो लौहित्यो दक्षजयन्ताय लौहित्याय ॥ १३ ॥
दक्षजयन्तो लौहित्यो विपश्चिते दृढजयन्ताय लौहित्याय ॥ १४ ॥ 15

विपश्चित् दृढजयन्तो लौहित्यो वैपश्चिताय दार्ढजयन्तये दृढ-जयन्ताय लौहित्याय ॥ १५ ॥

वैपश्चितो दार्ढजयन्तिः दृढजयन्तो लौहित्यो वैपश्चिताय दार्ढ-जयन्तये गुप्ताय लौहित्याय ॥ १६ ॥

तदेतदमृतं गायत्रम् । अथ यान्यन्यानि गीतानि काम्यान्येव 20 तानि । काम्यान्येव तानि ॥ १७ ॥

इति तृतीयेऽध्याये सप्तमेऽनुवाके पञ्चमः खण्डः

॥ सप्तमोऽनुवाकः समाप्तः ॥

**इति तृतीयोऽध्यायः** 24

---

2. MyLPI. जयन्तः पाराशर्यः is included in the previous Khanda.

3. & 4. I. वल्लि for पल्लि.

23. MyLI. after अनुवाकः समाप्तः ॥ add:—
बहुत्वाद्धारणाशक्ता विस्मरन्त्यल्पबुद्धयः ।
यमहं त्रिंशदध्यायमलिखं तं बृहद्गणम् ॥
MyI. after this add:—श्रीकृष्णाय परमगुरवे नमः ॥

## चतुर्थोऽध्यायः

### प्रथमोऽनुवाक :

### प्रथमः खण्डः

श्वेताश्वो दर्शतो हरिनीलोऽसि हरितस्पृशः समानबुद्धो मा हिंसीः
5 न मां त्वं वेत्थ । प्रद्रव ॥ १ ॥

यदभ्यवचरण अभ्यवैषि स्वपन्तं पुरुषमकोविदम् अश्ममयेन वर्मणा वरुणोऽन्तर्दधातु मा ॥ २ ॥

यदभ्यवचरणाभ्यवैषि स्वपन्तं पुरुषमकोविदम् अयस्मयेन वर्मणा वरुणोऽन्तर्दधातु मा ॥ ३ ॥

10 यदभ्यवचरणाभ्यवैषि स्वपन्तं पुरुषमकोविदं लोहमयेन वर्मणा वरुणोऽन्तर्दधातु मा ॥ ४ ॥

यदभ्यवचरणाभ्यवैषि स्वपन्तं पुरुषमकोविदं रजतमयेन वर्मणा वरुणोऽन्तर्दधातु मा ॥ ५ ॥

यदभ्यवचरणाभ्यवैषि स्वपन्तं पुरुषमकोविदं सुवर्णमयेन वर्मणा
15 वरुणोऽन्तर्दधातु मा ॥ ६ ॥

आयुर्माता मतिः पिता नमस्त आविशोषण । ग्रहो नामासि विश्वायुस्तस्मै ते विश्वाहा नमो नमस्ताम्राय नमो वरुणाय नमो जिघांसते ॥ ७ ॥

यक्ष्म राजन् मा मां हिंसीः । राजन् यक्ष्म मा हिंसीः । तयोः
20 संविदानयोः सर्वमायुरयान्यहम् ॥ ८ ॥

॥ इति चतुर्थेऽध्याये प्रथमोऽनुवाकः समाप्तः ॥

---

6. P. °चरणः for चरण throughout; MyS. after अकोविदम् add इति; My. मन्ममयेन, S. मन्मयेन for अश्ममयेन.
16. MyS. मातन for माता.
17. MyLSI. विश्वाहाय for विश्वाहा.
18. MySI. जिघांसवे for जिघांसते.
20. MyLS. अयाणि for अयानि.

## द्वितीयोऽनुवाकः

पुरुषो वै यज्ञः ॥ १ ॥

तस्य यानि चतुर्विंशतिर्वर्षाणि तत् प्रातःसवनम् । चतुर्विंश-त्यक्षरा गायत्री । गायत्रं प्रातःसवनम् ॥ २ ॥

तद् वसूनाम् । प्राणा वै वसवः । प्राणा हीदं सर्वं वस्वाददते ॥ ३ ॥ 5

स यद्येनमेतस्मिन् काल उपतपदुपद्रवेत् स ब्रूयात् प्राणा वै वसवः । इदं मे प्रातःसवनं माध्यंदिनेन सवनेन अनुसंतनुतेति । अगदो हैव भवति ॥ ४ ॥

अथ यानि चतुश्चत्वारिंशतं वर्षाणि तन्माध्यंदिनं सवनम् । 10 चतुश्चत्वारिंशदक्षरा त्रिष्टुप् । त्रैष्टुभं माध्यंदिनं सवनम् ॥ ५ ॥

तद्रुद्राणाम् । प्राणा वै रुद्राः । प्राणा हीदं सर्वं रोदयन्ति ॥६॥

स यद्येनमेतस्मिन् काल उपतपदुपद्रवेत् । स ब्रूयात् प्राणा रुद्रा इदं मे माध्यंदिनं सवनं तृतीयसवनेनानुसंतनुतेति । अगदो हैव भवति ॥७॥

अथ यान्यष्टाचत्वारिंशतं वर्षाणि तत् तृतीयसवनम् । अष्टा- 15 चत्वारिंशदक्षरा जगती । जागतं तृतीयसवनम् ॥ ८ ॥

तदादित्यानाम् । प्राणा वा आदित्याः । प्राणा हीदं सर्वमा-ददते ॥ ९ ॥

स यद्येनमेतस्मिन् काल उपतपदुपद्रवेत् स ब्रूयात् । प्राणा आदित्या इदं मे तृतीयसवनमायुषानुसंतनुतेति । अगदो हैव भवति ॥ १० ॥ 20

एतद्ध तद्विद्वान् ब्राह्मण उवाच । महिदास ऐतरेय उपतपति । किमिदमुपतपसि योऽहमनेन उपतपता न प्रेष्यामीति । स ह षोडश-शतं वर्षाणि जिजीव । प्र ह षोडशशतं वर्षाणि जीवति नैनं प्राणः साम्यायुषो जहाति । य एवं वेद ॥ ११ ॥

॥ इति चतुर्थेऽध्याये द्वितीयोऽनुवाकः समाप्तः ॥ 25

---

2. S. धर्म्यः for यज्ञः.

7. MySL. प्राणः for प्राणाः; P. om. वै.

10. S. °चत्वारिंशवर्षाणि for चत्वारिंशतं वर्षाणि.

13. My. न यदि for स यदि.

### तृतीयोऽनुवाकः

त्रियायुषं कश्यपस्य जमदग्नेस्त्रियायुषम् ।
त्रीण्यमृतस्य पुष्पाणि त्रीण्यायूंषि मेऽकृणोः ॥ १ ॥
स नो मयोभूः पितो आविशस्व शंतोकाय तनुवे स्योनः ॥ २ ॥
5 येऽग्नयः पुरीष्याः प्रविष्टाः पृथिवीमनु ।
तेषां त्वमस्युत्तमः प्र णो जीवातवे सुव ॥ ३ ॥
॥ इति चतुर्थेऽध्याये तृतीयोऽनुवाकः समाप्तः ॥

---

### चतुर्थोऽनुवाकः

अरण्यस्य वत्सोऽसि विश्वो नाम । विश्वाभिरक्षणोऽपां
10 वत्सोऽसि वरुणस्य दूतोऽन्तर्धिर्नाम ॥ १ ॥

यथा त्वममृत मर्तेभ्योऽन्तर्हितोऽसि एवं त्वमस्मानघायुभ्योऽन्तर्धेहि । अन्तर्धिरसि स्तेनेभ्यः ॥ २ ॥
13 ॥ इति चतुर्थेऽध्याये चतुर्थोऽनुवाकः समाप्तः ॥

---

2. P. त्र्यायुषम् see CN.; MyS. काश्यपस्य for कश्यपस्य.
3. My. पुष्णाति for पुष्पाणि.
4. पिताविशस्व शान्तिको यस् for पितो आविशस्वशं—.
9. MySI. अरण्य° for अरण्यस्य; P. अन्तर्धिनाम for अन्तर्धिर्नाम; P. विश्वनामा for विश्वो नाम; MySLI. विश्वाभिरक्षमापां for विश्वाभिरक्षणोऽपां.
10. P. पक्व: for वत्सः.
11. P. अमृतो for अमृत; S. न हितोऽसि for अन्तर्हितोऽसि.

## पञ्चमोऽनुवाकः

व्युषि सविता भवसि । उदेष्यन् विष्णुः । उद्यन् पुरुषः । उदितो बृहस्पतिः । अभिप्रयन् मघवा । इन्द्रो वैकुण्ठः मध्यंदिने । भगोऽपराह्णे । उग्रो देवो लोहितायन् । अस्तमिते यमो भवसि ॥ १ ॥

अश्नसु सोमो राजा । निशायां पितृराजः । स्वप्ने मनुष्यान् प्रविशसि । पयसा पशून् ॥ २ ॥ 5

विरात्रे भवो भवसि । अपररात्रे अङ्गिराः । अग्निहोत्रवेलायां भृगुः ॥ ३ ॥

तस्य तदेतदेव मण्डलमूधः । तस्यैतौ स्तनौ यद्वाक् च प्राणश्च । ताभ्यां मे धुक्ष्व अध्यायं ब्रह्मचर्यं प्रजां पशून् स्वर्गं लोकं सजातवनस्याम् ॥ ४ ॥ 10

एता आशिष आशासे । भूर्भुवः सुवः । उदिते शुक्रमादिश । तदात्मन् दधे ॥ ५ ॥

॥ इति चतुर्थेऽध्याये पञ्चमोऽनुवाकः समाप्तः ॥ 14

---

3. My. वै कर्णः, S. वै कूर्णः for वैण्कुठः.
5. My. अश्नत्सु, L. अग्नसु for अश्नसु.
9. S. om. तत्; My. ते for तत्.

## षष्ठोऽनुवाकः

### प्रथमः खण्डः

भगेरथो हैक्ष्वाको राजा कामप्रेण यज्ञेन यक्ष्यमाण आस ॥ १ ॥

तदु ह कुरुपाञ्चालानां ब्राह्मणा ऊचुः । भगेरथो ह वा अयमै-
5 क्ष्वाको राजा कामप्रेण यज्ञेन यक्ष्यमाणः एतेन कथां वदिष्याम इति ॥ २ ॥

तं हाभ्येयुः । तेभ्यो हाभ्यागतेभ्योऽपचितीश्चकार ॥ ३ ॥

अथ हैषां स भाग आवव्राज उप्त्वा केशश्मश्रूणि नखान् निकृत्य आज्येन अभ्यज्य दण्डोपानहं बिभ्रत् ॥ ४ ॥

तान् होवाच । ब्राह्मणा भगवन्तः कतमो वस्तद् वेद यथा-
10 श्रावितप्रत्याश्राविते देवान् गच्छत इति ॥ ५ ॥

अथ होवाच । कतमो वस्तद्वेद यद्विदुषः सूद्गाता सुहोता स्वध्वर्युः सुमानुषविदाजायत इति ॥ ६ ॥

अथ होवाच । कतमो वस्तद् वेद यच्छन्दांसि प्रयुज्यन्ते यत्तानि सर्वाणि संस्तुतानि अभिसंपद्यन्ते इति ॥ ७ ॥

15 अथ होवाच । कतमो वस्तद् वेद यथा गायत्र्या उत्तमे अक्षरे पुनर्यज्ञमपिगच्छत इति ॥ ८ ॥

अथ होवाच । कतमो वस्तद्वेद यथा दक्षिणाः प्रतिगृहीता न हिंसन्तीति ॥ ९ ॥

इति चतुर्थेऽध्याये षष्ठेऽनुवाके प्रथमः खण्डः

---

20 
### द्वितीयः खण्डः

एतान् हैनान् पञ्च प्रश्नान् पप्रच्छ ॥ १ ॥

22 तेषां ह कुरुपाञ्चालानां बको दाल्भ्योऽनूचान आस ॥ २ ॥

---

3. SMy. भगो for भगे°.
7. S. सभाभ्यः for स भागः.
8. S. om. आज्येन; My. अञ्ज्य, L. अज्य for आज्येन.
21. S. after एतान् adds व.

स ह्योवाच । यथाश्रावितप्रत्याश्राविते देवान् गच्छतः इति । प्रच्यां वै राजन् दिश्याश्रावितप्रत्याश्राविते देवान् गच्छतः । तस्मात् प्राङ् तिष्ठन्नाश्रावयति प्राङ् तिष्ठन् प्रत्याश्रावयति इति ॥ ३ ॥

अथ ह्योवाच । यद्विदुषः सूद्गाता सुह्योता स्वध्वर्युः सुमानुष-विदाजायत इति । यो वै मनुष्यस्य संभूतिं वेदेति ह्योवाच तस्य सूद्गाता 5 सुह्योता स्वध्वर्युः सुमानुषविदाजायत इति । प्राणा उ ह् वाव राजन् मनुष्यस्य संभूतिरेवेति ॥ ४ ॥

अथ ह्योवाच । यच्छन्दांसि प्रयुज्यन्ते यत्तानि सर्वाणि संस्तुता-न्यभिसंपद्यन्ते इति गायत्रीमु ह् वाव राजन् सर्वाणि च्छन्दांसि संस्तुतान्यभिसंपद्यन्त इति ॥ ५ ॥ 10

अथ ह्योवाच । यथा गायत्र्या उत्तमे अक्षरे पुनर्यज्ञमपिगच्छत इति वषट्कारेणो ह् वाव राजन् गायत्र्या उत्तमे अक्षरे पुनर्यज्ञमपि-गच्छत इति ॥ ६ ॥

इति चतुर्थेऽध्याये षष्ठेऽनुवाके द्वितीयः खण्डः

---

## तृतीयः खण्डः 15

अथ ह्योवाच । यथा दक्षिणाः प्रतिगृहीता न हिंसन्तीति । यो वै गायत्र्यै मुखं वेदेति ह्योवाच तं दक्षिणाः प्रतिगृहीताः न हिंसन्तीति ॥ १ ॥

अग्निर्हं वाव राजन् गायत्रीमुखम् । तस्माद् यदग्नावभ्यादधाति भूयानेव स तेन भवति वर्धते एवमेवैवं विद्वान् ब्राह्मणः प्रतिगृह्णन् भूयानेव भवति वर्धत उ एवेति ॥ २ ॥ 20

स ह्योवाच । अनूचानो वै किलायं ब्राह्मण आस । त्वामहमनेन यज्ञेनैमीति ॥ ३ ॥ 22

---

2. L. अस्मात् for तस्मात्.
7. MyL. after संभूतिः add धरः; S. संभूतिर्द्धुरः for संभूतिः.
16. The passage अथ ह्योवाच । यथा दक्षिणाः प्रतिगृहीता न हिंसन्तीति is included in the previous chapter in MyLSP.

तस्य वै ते तथोद्गास्यामीति होवाच । यथैकराडेव भूत्वा स्वर्गं लोकमेष्यसीति ॥ ४ ॥

तस्मा एतेन गायत्रेणोद्गीथेनोज्जगौ । स हैकराडेव भूत्वा स्वर्गं लोकमियाय । तेन हैतेन एकराडेव भूत्वा स्वर्गं लोकमेति ॥ ५ ॥

5 ओं वा इति द्वे अक्षरे । ओं वा इति चतुर्थे । ओं वा इति षष्ठे । हुम् भा ओं वागित्यष्टमे ॥ ६ ॥

तेन हैतेन प्रतीदर्शोऽस्य भयदस्यासमात्यस्योज्जगौ ॥ ७ ॥

तं होवाच । किं त आगास्यामीति । स होवाच । हरीमे देवाश्वा वा गायेति । तथेति । तौ हास्मा आजगौ । तौ हैन-
10 माजग्मतुः ॥ ८ ॥

स वा एष उद्गीथः कामानां संवत् । ओंवा३च् ओंवा३च् ओंवा३च् हुम् भा ओं वागिति । साङ्गो हैव सतनुरमृतः संभवति । य एतदेवं वेद । अथो यस्यैवं विद्वानुद्गायति ॥ ९ ॥

इति चतुर्थेऽध्याये षष्ठेऽनुवाके तृतीयः खण्डः

15 ॥ षष्ठोऽनुवाकः समाप्तः ॥

---

8. S. किंच for किं त.

9. S. वागा एति for वा गायेति.

12. S. साङ्गे for साङ्गो.

## सप्तमोऽनुवाकः

### प्रथमः खण्डः

पुरुषो वै यज्ञः । पुरुषो होद्गीथः । अथैत एव मृत्यवो यदग्निर्वायुरादित्यश्चन्द्रमाः ॥ १ ॥

ते ह पुरुषं जायमानमेव मृत्युपाशैरभिदधति । तस्य वाचमेवाग्निरभिदधाति । प्राणं वायुः । चक्षुरादित्यः । श्रोत्रं चन्द्रमाः ॥ २ ॥ 5

तदाहुः । स वा उद्गाता यो यजमानस्य प्राणेभ्योऽधि मृत्युपाशान् मुञ्चतीति ॥ ३ ॥

तद्यस्यैवं विद्वान् प्रस्तौति य एवास्य वाचि मृत्युपाशस्तमेवास्योन्मुञ्चति ॥ ४ ॥ 10

अथ यस्यैवं विद्वानुद्गायति य एवास्य प्राणे मृत्युपाशस्तमेवास्योन्मुञ्चति ॥ ५ ॥

अथ यस्यैवं विद्वान् प्रतिहरति य एवास्य चक्षुषि मृत्युपाशः तमेवास्योन्मुञ्चति ॥ ६ ॥

अथ यस्यैवं विद्वान् निधनमुपैति य एवास्य श्रोत्रे मृत्युपाशस्तमेवास्योन्मुञ्चति ॥ ७ ॥ 15

एवं वा एवंविदुद्गाता यजमानस्य प्राणेभ्योऽधि मृत्युपाशान् उन्मुञ्चति ॥ ८ ॥

तदाहुः । स वा उद्गाता यो यजमानस्य प्राणेभ्योऽधि मृत्युपाशानुन्मुच्य अथैनं साङ्गं सतनुं सर्वमृत्योः स्पृणातीति ॥ ९ ॥ 20

इति चतुर्थेऽध्याये सप्तमेऽनुवाके प्रथमः खण्डः

---

### द्वितीयः खण्डः

तद्यस्यैवं विद्वान् हिंकरोति य एवास्य लोमसु मृत्युपाशस्तस्मादेवैनं स्पृणाति ॥ १ ॥ 24

अथ यस्यैवं विद्वान् प्रस्तौति य एवास्य त्वचि मृत्युपाशस्त-स्मादेवैनं स्पृणाति ॥ २ ॥

अथ यस्यैवं विद्वानादिमादत्ते य एवास्य मांसेषु मृत्युपाशस्त-स्मादेवैनं स्पृणाति ॥ ३ ॥

5 अथ यस्यैवं विद्वानुद्गायति य एवास्य स्नावसु मृत्युपाशस्त-स्मादेवैनं स्पृणाति ॥ ४ ॥

अथ यस्यैवं विद्वान् प्रतिहरति य एवास्याङ्गेषु मृत्युपाशस्त-स्मादेवैनं स्पृणाति ॥ ५ ॥

अथ यस्यैवं विद्वानुपद्रवति य एवास्यास्थिषु मृत्युपाशस्त-
10 स्मादेवैनं स्पृणाति ॥ ६ ॥

अथ यस्यैवं विद्वान् निधनमुपैति य एवास्य मज्जासु मृत्युपाशः स तस्मादेवैनं स्पृणाति ॥ ७ ॥

एवं वा एवंविदुद्गाता यजमानस्य प्राणेभ्योऽधि मृत्युपाशान्-न्मुच्य अथैनं साङ्गं सतनुं सर्वमृत्योः स्पृणाति ॥ ८ ॥

15 तदाहुः । स वा उद्गाता यो यजमानस्य प्राणेभ्योऽधि मृत्यु-पाशानुन्मुच्य अथैनं साङ्गं सतनुं सर्वमृत्योः स्पृत्वा स्वर्गे लोके सप्तधा दधातीति ॥ ९ ॥

स वा एष इन्द्रो वैमृध उद्यन् भवति सवितोदितो मित्रः संगव-काल इन्द्रो वैकुण्ठो मध्यंदिने समावर्तमानः शर्व उग्रो देवो लोहितायन्
20 प्रजापतिरेव संवेशेऽस्तमितः ॥ १० ॥

तद्यस्यैवं विद्वान् हिंकरोति य एवास्योद्यतः स्वर्गो लोकः
22 तस्मिन्नेवैनं दधाति ॥ ११ ॥

---

1. L. क्वचित् for त्वचि.
3. L. om. अथ....आदिमादत्ते....स्पृणाति.
18. MyS. उद्यान् for उद्यन्.
19. I. माध्यं for मध्यं.
20. MyLS. संवेशः for संवेशे.

अथ यस्यैवं विद्वान् प्रस्तौति य एवास्योदिते स्वर्गो लोकः तस्मिन्नेवैनं दधाति ।। १२ ।।

अथ यस्यैवं विद्वान् आदिमादत्ते य एवास्य संगवकाले स्वर्गो लोकः तस्मिन्नेवैनं दधाति ।। १३ ।।

अथ यस्यैवं विद्वानुद्गायति य एवास्य मध्यंदिने स्वर्गो लोकः तस्मिन्नेवैनं दधाति ।। १४ ।। 5

अथ यस्यैवं विद्वान् प्रतिहरति य एवास्यापराह्णे स्वर्गो लोकः तस्मिन्नेवैनं दधाति ।। १५ ।।

अथ यस्यैवं विद्वानुपद्रवति य एवास्यास्तंयतः स्वर्गो लोकः तस्मिन्नेवैनं दधाति ।। १६ ।। 10

अथ यस्यैवं विद्वान्निधनमुपैति य एवास्यास्तमिते स्वर्गो लोकः तस्मिन्नेवैनं दधाति ।। १७ ।।

एवं वा एवंविदुद्गाता यजमानस्य प्राणेभ्योऽधि मृत्युपाशान् उन्मुच्याथैनं साङ्गं सतनुं सर्वमृत्योः स्पृत्वा स्वर्गे लोके सप्तधा दधाति ।। १८ ।। 15

इति चतुर्थेऽध्याये सप्तमेऽनुवाके द्वितीयः खण्डः

।। सप्तमोऽनुवाकः समाप्तः ।।

5. MyLS. माध्यं for मध्यं.

14. I. सप्त for सप्तधा.

## अष्टमोऽनुवाकः

### प्रथमः खण्डः

षड्ढ वै देवताः स्वयंभुवः अग्निर्वायुरसावादित्यः प्राणोऽन्नं वाक् ॥ १ ॥

5 ताः श्रैष्ठ्ये व्यवदन्त । अहं श्रेष्ठास्मि । अहं श्रेष्ठास्मि । मां श्रियमुपाध्वमिति ॥ २ ॥

ता अन्योन्यस्यै श्रेष्ठतायै नातिष्ठन्त । ता अब्रुवन् । न वा अन्योन्यस्यै श्रेष्ठतायै तिष्ठामहै । एत संप्रब्रवामहै यथा श्रेष्ठाः स्म इति ॥ ३ ॥

10 ता अग्निमब्रुवन् कथं त्वं श्रेष्ठोऽसीति ॥ ४ ॥

सोऽब्रवीत् । अहं देवानां मुखमस्मि । अहमन्यासां प्रजानाम् । मय्याहुतयो हूयन्ते । अहं देवानामन्नं विकरोमि । अहं मनुष्याणाम् ॥ ५ ॥

स यद[हं न]स्याममुखा एव देवाः स्युरमुखा अन्याः प्रजाः । नाहुतयो हूयेरन् । न देवानामन्नं विक्रियेत न मनुष्याणाम् ॥ ६ ॥

15 तत इदं सर्वं पराभवेत् । ततो न किंचन परिशिष्येतेति ॥ ७ ॥

एवमेति होचुः । नैवेह किंचन परिशिष्येत यत् त्वं न स्या इति ॥ ८ ॥

अथ वायुमब्रुवन् । कथमु त्वं श्रेष्ठोऽसीति ॥ ९ ॥

सोऽब्रवीत् । अहं देवानां प्राणोऽस्मि । अहमन्यासां प्रजानाम् ।

20 यस्मादहमुत्क्रामामि ततः स प्रप्लवते ॥ १० ॥

---

5. MyLSI. श्रैष्ठ्येष्ववदन्त for श्रैष्ठ्ये व्यवदन्त.

7. & 8. I. अन्यान्यस्यै for अन्योन्यस्यै.

8. P. एता for एत.

12. P. मया for मयि.

13. MyLSI. यदस्यां P. यन्न स्यां for यदहं न स्यां See CN.; MyS. मुखाः for अमुखाः.

15. MyLS. शिष्य for °शिष्येत.

स यदहं न स्यां तत इदं सर्वं पराभवेत् । ततो न किंचन परिशिष्येतेति ॥ ११ ॥

एवमेवेति होचुः । नैवेह किंचन परिशिष्येत यत्त्वं न स्या इति ॥ १२ ॥

इति चतुर्थेऽध्याये अष्टमेऽनुवाके प्रथमः खण्डः 5

---

## द्वितीयः खण्डः

अथादित्यमब्रुवन् । कथमु त्वं श्रेष्ठोऽसीति ॥ १ ॥

सोऽब्रवीत् । अहमेवोद्यन्नहर्भवामि । अहमस्तंयन् रात्रिः । मया चक्षुषा कर्माणि क्रियन्ते । स यदहं न स्यां नैवाहः स्यात् । न रात्रिः । न कर्माणि क्रियेरन् ॥ २ ॥ 10

तत इदं सर्वं पराभवेत् । ततो न किंचन परिशिष्येतेति ॥ ३ ॥

एवमेवेति होचुः । नैवेह किंचन परिशिष्येत । यत् त्वं न स्या इति ॥ ४ ॥

अथ प्राणमब्रुवन् । कथमु त्वं श्रेष्ठोऽसीति ॥ ५ ॥

सोऽब्रवीत् प्राणो भूत्वा अग्निर्दीप्यते । प्राणो भूत्वा वायुराका- 15
शमनुभवति । प्राणो भूत्वा आदित्य उदेति । प्राणादन्नम् । प्राणाद्वाक् ॥ ६ ॥

स यदहं न स्यां तत इदं सर्वं पराभवेत् । न किंचन परिशिष्ये-तेति ॥ ७ ॥

एवमेवेति होचुः । नैवेह किंचन परिशिष्येत यत् त्वं न स्या इति ॥ ८ ॥ 20

अथान्नमब्रुवन् । कथमु त्वं श्रेष्ठमसीति ॥ ९ ॥

तदब्रवीन्मयि प्रतिष्ठायाग्निर्दीप्यते । मयि प्रतिष्ठाय वायुराका-
शमनुविभवति । मयि प्रतिष्ठायादित्य उदेति । मदेव प्राणः । 23
मद्वाक् ॥ १० ॥

---

23. My. अनुभवति for अनुविभवति·

स यदहं न स्यां तत इदं सर्वं पराभवेत् । ततो न किंचन परिशिष्येतेति ॥ ११ ॥

एवमेवेति होचुर्नैवेह किंचन परिशिष्येत यत् त्वं न स्या इति ॥ १२ ॥

अथ वाचमब्रुवन् । कथमु त्वं श्रेष्ठासीति ॥ १३ ॥

5 साब्रवीत् मयैवेदं विज्ञायते । मयादः । स यदहं न स्यां नैवेदं विज्ञायेत । नादः ॥ १४ ॥

तत इदं सर्वं पराभवेत् । नैवेह किंचन परिशिष्येतेति ॥ १५ ॥

एवमेवेति होचुर् नैवेह किंचन परिशिष्येत । यत् त्वं न स्या इति ॥ १६ ॥

10 इति चतुर्थेऽध्याये अष्टमेऽनुवाके द्वितीयः खण्डः

---

## तृतीयः खण्डः

ता अब्रुवन् । एता वै किल सर्वा देवताः । एकैकामेवानु स्मः । स यन्नु नः सर्वासां देवतानामेकाचन न स्यात् तत इदं सर्वं पराभवेत् । ततो न किंचन परिशिष्येत । हन्त साधं समेत्य यच्छ्रेष्ठं तत्सामेति ॥ १ ॥

15 ता एतस्मिन् प्राण ओकारे वाच्यकारे समायन् । तद्यत् समायन् तत् साम्नः सामत्वम् ॥ २ ॥

ता अब्रुवन् यानि नो मर्त्यान्यनपहतपाप्मानि अक्षराणि तान्युद्धृत्यामृतेष्वपहतपाप्मसु शुद्धेष्वक्षरेषु गायत्रं गायामाग्नौ वायावादित्ये प्राणेऽन्ने वाचि । येनापहत्य मृत्युमपहत्य पाप्मानं स्वर्गं लोकमिया-
20 मेति ॥ ३ ॥

---

1. My. om. स यदहं.... विज्ञायते मयादः. (L. 5)
5. S. यन्न स्यां for यदहं न स्यां.
7. I. ततो न for नैवेह; MyLS. शिष्यति for °शिष्येत.
13. L. नः स्यात् for न स्यात्.
14. MyI. यस्मै एतदसामेति for यच्छ्रेष्ठं तत्; P. तपसामेति for तत्सामेति.
15. L. वाच्चकारे for वाच्यकारे.
19. P. तेन for येन.

एत्यग्नेरमृतमपहतपाप्म शुद्धमक्षरम् । ग्निरित्यस्य मर्त्यमनपहतपाप्माक्षरम् ॥ ४ ॥

वेति वायोरमृतमपहतपाप्म शुद्धमक्षरम् । युरित्यस्य मर्त्यमनपहतपाप्माक्षरम् ॥ ५ ॥

ए (ऐ?) त्यादित्यस्यामृतमपहतपाप्म शुद्धमक्षरम् । त्येत्यस्य मर्त्यमनपहतपाप्माक्षरम् ॥ ६ ॥ 5

प्रेति प्राणस्यामृतमपहतपाप्म शुद्धमक्षरम् । णेत्यस्य मर्त्यमनपहतपाप्माक्षरम् ॥ ७ ॥

एत्यन्नस्यामृतमपहतपाप्म शुद्धमक्षरम् । न (न्न?) मित्यस्य मर्त्यमनपहतपाप्माक्षरम् ॥ ८ ॥ 10

वेति वाचोऽमृतमपहतपाप्म शुद्धमक्षरम् । गित्यस्यै मर्त्यमनपहतपाप्माक्षरम् ॥ ९ ॥

ता एतानि मर्त्यान्यनपहतपाप्मान्यक्षराण्युद्धृत्य अमृतेष्वपहतपाप्मसु शुद्धेषु अक्षरेषु गायत्रमागायन् अग्नौ वायावादित्ये प्राणेऽन्ने वाचि । तेनापहत्य मृत्युमपहत्य पाप्मानं स्वर्गं लोकमायन् ॥ १० ॥ 15

अपहत्य मृत्युमपहत्य पाप्मानं स्वर्गं लोकमेति य एवं वेद ॥ ११ ॥

इति चतुर्थेऽध्याये अष्टमेऽनुवाके तृतीयः खण्डः

---

## चतुर्थः खण्डः

ता ब्रह्माब्रुवन् । त्वयि प्रतिष्ठायैतमुद्यच्छामेति । ता ब्रह्माब्रवीत् आस्येन प्राणेन युष्मान् आस्येन प्राणेन मामुपाप्नवाथेति ॥ १ ॥ 20

---

1. S. अर्द्धम् for शुद्धम्.
5. S. om. एत्यादित्यस्य....त्येत्यस्य....°क्षरम् (L. 6).
9. I. अन्नम् for न (न्नम्?) म्.
14. I. अगायन् for आगायन्.
20. MyI. आस्येन्न न, L. आस्येन्नेन, S. आस्येग्ने न for आस्येन; MyL. युष्मा for युष्मान्.

ता एतेन प्राणेन ओकारेण वाच्यकारमभिनिमेष्यन्त्यो हिंकाराद् भकारमोकारेण वाचमनुस्वरन्त्य उभाभ्यां प्राणाभ्यां गायत्रमगायन् । ओवा३च् ओवा३च् ओवा३च् हुम् भा वो वा इति ॥ २ ॥

स यथोभयापदी प्रतितिष्ठति एवमेव स्वर्गे लोके प्रत्यतिष्ठन् ।
5 प्रति स्वर्गे लोके तिष्ठति य एवं वेद ॥ ३ ॥

य उ ह वा एवंविदस्माल्लोकात् प्रैति स प्राण एव भूत्वा वायुमप्येति वायोरध्यभ्राण्यभ्रेभ्योऽधि वृष्टिं वृष्ट्यैवेमं लोकमनुविभवति ॥४॥

ऋषयो ह स सत्रमासां चक्रिरे । ते पुनःपुनर्बह्वीभिः बह्वीभिः प्रतिपद्भिः स्वर्गस्य लोकस्य द्वारं नानु चन बुबुधिरे ॥ ५ ॥

10 त उ श्रमेण तपसा व्रतचर्येण इन्द्रमवरुरुधिरे ॥ ६ ॥

तं होचुः स्वर्गं वै लोकमैप्सिष्म । ते पुनः पुनः बह्वीभिः बह्वीभिः प्रतिपद्भिः स्वर्गस्य लोकस्य द्वारं नानु चनाभुत्स्महि । तथा नोऽनुशाधि यथा स्वर्गस्य लोकस्य द्वारमनुप्रज्ञाय अनार्ताः स्वस्ति संवत्सरस्योदृचं गत्वा स्वर्गं लोकमियामेति ॥ ७ ॥

15 तान् होवाच । को वः स्थविरतम इति । अहमित्यगस्त्यः ॥ ८ ॥

इति चतुर्थेऽध्याये अष्टमेऽनुवाके चतुर्थः खण्डः

---

## पञ्चमः खण्डः

स वा एहीति होवाच । तस्मै वै ते अहं तद् वक्ष्यामि यद्विद्वांसः स्वर्गस्य लोकस्य द्वारमनुप्रज्ञाय अनार्ताः स्वस्ति संवत्सरस्योदृचं गत्वा
20 स्वर्गं लोकमेष्यथेति ॥ १ ॥

---

1. MyLSI. °निमेषन्त्यो for °निमेष्यन्त्यो.
4. MySI. °तिष्ठेत्, L. °तिष्ठत् for °तिष्ठति; S. व्यतिष्ठन् for प्रत्यतिष्ठन्.
6. S. प्राणाः for प्राणः.
7. My. अनुभवति for अनुविभवति.
12. My. °भूस्महि LS. °भूत् स्म हि for °भुत्स्महि.
15. In MyLSPI. अहमित्यगस्त्यः is taken over to the next Khanda.
19. I. after लोकस्य adds: द्वारमवैवं.

तस्मा एतं गायत्रस्योद्गीथमुपनिषदममृतमुवाचाग्नौ वायावादित्ये प्राणेऽन्ने वाचि ॥ २ ॥

ततो वै ते स्वर्गस्य लोकस्य द्वारमनुप्रज्ञाय अनार्ताः स्वस्ति संवत्सरस्योदृचं गत्वा स्वर्गं लोकमायन् ॥ ३ ॥

एवमेवैवं विद्वान् स्वर्गस्य लोकस्य द्वारमनुप्रज्ञाय अनार्तः स्वस्ति संवत्सरस्योदृचं गत्वा स्वर्गं लोकमेति ॥ ४ ॥ 5

इति चतुर्थेऽध्याये अष्टमेऽनुवाके पञ्चमः खण्डः

॥ अष्टमोऽनुवाकः समाप्तः ॥

### नवमोऽनुवाकः

#### प्रथमः खण्डः

एवं वा एतं गायत्रस्योद्गीथमुपनिषदममृतमिन्द्रोऽगस्त्यायोवाच ॥१॥
अगस्त्य इषाय श्यावाश्वये ॥ २ ॥
5 इषः श्यावाश्विः गौषूक्तये ॥ ३ ॥
गौषूक्तिर्ज्वालायनाय ॥ ४ ॥
ज्वालायनः शाट्यायनये ॥ ५ ॥
शाट्यायनी रामाय क्रातुजातेयाय वैयाघ्रपद्याय ॥ ६ ॥
रामः क्रातुजातेयो वैयाघ्रपद्यः शङ्खाय बाभ्रव्याय ॥ ७ ॥
10 इति चतुर्थेऽध्याये नवमेऽनुवाके प्रथमः खण्डः

#### द्वितीयः खण्डः

शङ्खो बाभ्रव्यो दक्षाय कात्यायनय आत्रेयाय ॥ १ ॥
दक्षः कात्यायनिरात्रेयः कंसाय वारक्याय ॥ २ ॥
कंसो वारक्यः सुयज्ञाय शाण्डिल्याय ॥ ३ ॥
15 सुयज्ञः शाण्डिल्योऽग्निदत्ताय शाण्डिल्याय ॥ ४ ॥
अग्निदत्तः शाण्डिल्यः सुयज्ञाय शाण्डिल्याय ॥ ५ ॥
सुयज्ञः शाण्डिल्यः जयन्ताय वारक्याय ॥ ६ ॥
जयन्तो वारक्यो जनश्रुताय वारक्याय ॥ ७ ॥
जनश्रुतो वारक्यः सुदत्ताय पाराशर्याय ॥ ८ ॥
20 सैषा शाट्यायनी गायत्रस्योपनिषद् एवमुपासितव्या ॥ ९ ॥
इति चतुर्थेऽध्याये नवमेऽनुवाके द्वितीयः खण्डः
॥ नवमोऽनुवाकः समाप्तः ॥
**॥ जैमिनीयोपनिषद्ब्राह्मणं समाप्तम् ॥**

---

9. MyLSPI. शङ्खाय बाभ्रव्याय is taken over to the next Khanda.
20. MyS. उपासितव्यम् for उपासितव्या.
The केनोपनिषद् which is part of this Brāhmaṇa begins hereafter from the 10th अनुवाक. It contains altogether eleven Khandas in three anuvākas. We have not included this portion in our edition for obvious reason.

## CRITICAL NOTES

P. 9. L. 16.

The Mss and the printed editions all read only क्षीरे क्षीरमासिच्यात् which in the context of the two previous sub-clauses, should be in possessive voice. Oertel, in his note, is more concerned about the correctness of the verbal form and appropriateness of the mood used rather than the structural uniformity of the sentences. He says: "The precative āsicyād (ĀSS. ii. 3.5, āsiñcyād) among these optatives is very surprising, and calls perhaps an emendation (āsiñced?)". In the printed Devanāgari edition the readings corrected by Caland are given separately where आसिच्येत is given as the correct reading. Evidently Caland must have corrected क्षीरे also as क्षीरेण but in the correction list this is not found. It is, however, clear that the sentence is corrupt. In this long sentence there are three sub-clauses,— यथाद्भिरापः संसृज्येरन्; यथाग्निनाग्निः संसृज्येत and यथा क्षीरे (ण) क्षीरमासिच्यात् (°च्येत?), all serving as similies to the following main clause. Therefore, this sub-clause also must be in possessive voice. We have, accordingly corrected it as:-यथा क्षीरेण क्षीरमासिच्येत.

P. 10. L. 1.

एतं ह वा एतं न्यङ्गम्. MYLI read this as एतन्यङ्गम् throughout. This passage in paragraphs 2-5, if we look at the commencing sentence in paragraph 1 and 6 immediately preceding and following, should be तं ह वा एतं न्यङ्गम्. The paragraphs 2-5 explain the mysterious significance of the sign or symbol which represents हिंकार and pronounced as हिम्भा or हिंवा. The words एतं न्यङ्गम् might have been written as एतन्न्यङ्गम् with sandhi which was wrongly transcribed later as एतन्यङ्गम्. The phrase तं ह वा एतं न्यङ्गं would be idiomatic and at the same time would conform to the usual style of this Brāhmaṇa not only in this Khanda but throughout. It is rather unusual to have एतं twice, one following the other, in a sentence to refer to the same object.

P. 22. L. 9.

P. यदमृते, L. यदकृते, My. यदन्य ..... The readings in all these MSS are corrupt.

It has been already stated in the previous Khanda that Prajāpati instructed the Gods that they could get into heaven provided they sang Sāmagāna not melodized on a ṛcā, अनृचेन साम्ना. The gods accordingly reached heaven singing the ṛc-less Sāmagāna, i. e., evidently what is known as staubhika-gāna. Since ṛk-padas which formed the body of sāmagāna could find no place in their gānas which are exclusively sung on stobhas, the ṛcās representing the wealth and glory were thrown scattered on the way. The Asuras collected these ṛk-padas and flourished but the gods, though they reached heaven, deprived of श्री became unhappy and miserable. In this Khaṇḍa, the rites, by means of which they regained their wealth from Asuras, as well as retained their possession of heaven, are referred to. The gods by singing the sāmans melodized on ṛcās during the midday and evening savanas drove away the Asuras and regained their glory; by singing ṛc-less gāna during the morning savana they kept their possession of heaven undisturbed.

Therefore, the Brāhmaṇa says, if one sings sāmans based on ṛcās during the middy and evening savanas one will push away his enemy from this world and if one sings ṛc-less sāmans during the morning savana one goes to heaven.—स यत्ते ऋचि गायति तेनास्माल्लोकात् द्विषन्तं भ्रातृव्यं नुदते । अथ यदनृचेन देवतासु (!) गायति तेन स्वर्गं लोकमेति ।

It may be seen that अमृते of P or अकृते of L does not suit in the context and both the veriants are meaningless. The MSMY appears to have preserved the better readings here, but because of lacuna after यदन्य (नृ?) it does not help us. Caland has rightly suggested अनृचे. But the readings should be either अनृचि (साम्नि) or अनृचेन (साम्ना) and देवतासु should be deleted from the sentence. साम्ना गायति is an usual idiom used in the Vedic language. vide साम्नोद्गायति JUBr. IV. 6. 2. 2.

P. 23. L. 20.

कस्मादु नोऽसृष्ठा .... आसिथेति. The readings in Mss are corrupt. We have, therefore, accepted the readings as in P.

P. 28. L. 4.

मध्वालोपम्. This is the reading found in the printed edition and M̄ss which Oertel has translated as a "bite of honey". But मध्वालोपं sounds strange and does not seem to be the usual phrase. The custom was to eat lāja, the fried rice, with honey– a purifying and refreshing food mentioned in the Brāhmaṇas. The simile has been referred to once before in this Brāhmaṇa– स यथा मधुना लाजान् प्रायुयात् एवम् (JUBr. 1.2.110.; also cp. JB— स यथा मधुना लाजान् प्रायुयात् एवम् . . . I. 322 and मध्वासिच्य लाजानावपेत् II. 77.) Therefore, स यथा मध्वा लाजान् अद्यात् would be more appropriate and correct. Further the meaning of मध्वालोपं is doubtful and cannot mean 'a bite of honey'–a strange expression indeed!

P. 29. LL.–6–7.

After रसः प्राणेदत् MyL add स त्रयीविद्यामभ्यपीळयत् (°भ्यविष्टयत् My.) तस्याभिपीळितस्या (°विष्टितस्स्यात् My) तासामभिपीळितानां (विष्टितानां My) रसः प्राणेदत्. The printed editions have removed this portion assuming that it is redundant. But *loka*, the world, does not seem to have been pressed out directly from the eternal *vāk*. The order of emergence,-evolution or creation,—appears to be thus:— *trayīvidyā* came out of *vāk* and out of the trayī-vidyā the worlds. This becomes clear from the next chapter where these entities are again referred to but in the reverse order. There *akṣara* just as *trayī-vidyā* has been referred to twice, once before *vyāhṛti* and once between *loka* and *vāk*. This *akṣara* is nothing but the mystic syllable ॐ which could be the same as the *trayī-vidyā*. We have, therefore, retained the above sentences with necessary corrections and additions.

P. 36. L. 6.

My. यतोऽन्यथा विदुः, L. एतोऽन्यथा विदुः, P. अतोऽन्यथा विदुः.—all these readings are not correct. According to the Brāhmaṇa the sāman called *aniṣedha* is actually *sarvato-dvāra* i. e., having doors on all sides. Yet, says the Brāhmaṇa, some have misunderstood it to be *anyato-dvāra*, i. e., having doors on otherside or opposite side–, अन्यतोद्वारं हैनदेक एवाभ्रङ्गमुपासते । य एतदन्यथा विदुः ।. Therefore, the readings found in My LP are not correct. The next sentence:-अथ य एतदेवं वेद स एवैतत् सर्वतोद्वारमनिषेधं साम वेद makes this expressly

clear. It says that "only he, who knows it thus knows the *aniṣedha* sāman having doors on all sides". Therefore, the sentence should be य एतदन्यथा विदुः.

P. 37. L. 19.

Often the division of chapters in this Brāhmaṇa has been done arbitrarily and some times the sentences are split up between two chapters. This is wrong and unwarranted. We have overlooked this unnatural division throughout. In khaṇḍa one the sentences स यद्ध.... कुरुते । तदेतदृचाभ्यनूच्यते have been included which does not seem to be proper. This Khaṇḍa should rightly end with य एवं वेद ।, a usual and normal conclusion for a paragraph or a chapter in the Brāhmaṇas and Upaniṣads, after discussion of a topic. The ṛcā, यद् द्याव इन्द्र (RV. VIII. 70.5) is in support of the statement expressed in the sentence: स यद्ध... Therefore, it is wrong to remove these sentences from their proper place and context i.e. fıom khaṇḍa two and include them in khaṇḍa one as concluding sentences. तदेतदृचाभ्यनूच्यते means "That is what is said by the verse". It is absurd to separate this introductory sentence from what is being introduced. We have, therefore, overlooked this arbitrary division, and removed these sentences to their right sequence.

P. 41. L. 12.

The meaning of the sentence ता एताः सामान्ये एव सत्यो व्यूढो अन्नाद्याय is obscure. The variants found in P. or L. do not help us any way to understand the sentence. Maybe some of the words are lost in the process of transmission. Unless we get some good Mss, many riddles regarding the obscure and doubtful readings will not be solved.

P. 51. L. 7.

The sentence तदेतदृचाभ्यनूच्यते which introduces the verse रूपं रूपं is found included as the concluding sentence of the second khaṇḍa in MyLP. The natural and right place for this could be only just before the ṛcā and it should not therefore be concealed in the previous chapter. Similarly the second khaṇḍa reaches its

natural conclusion with sentence: स एतदेवं वेद । ज्योतिष्मान्.... भवति ।. We have, therefore, emended the paragraphs accordingly.

P. 53. L. 12.

प्रजापतिर्वविदमग्रे. The Mss and P read प्रजापतिर्वा वेद अग्रे which is wrong. We have therefore emended the readings.

—L. 12.

The passage आभूतिरन्नमस्य तत् । तदञ्चर्धा भवति as found in Mss and in P, is corrupt and unintelligible. Oertal has corrected तदञ्चर्धा as तच्चतुर्धा but in the notes he says "the conjecture is uncertain; perhaps the reading was *pañcadha.*" We have accepted तच्चतुर्धा as conjectured by Oertel for reason that the Brāhmaṇa says subsequently that "from the food Prajāpati created months, half-months, days and nights, mornings"—which comprises the fourfold division of a season.

P. 54. L. 13.

नाम चक्षुरस्य तत् forms the concluding sentence of the second khaṇḍa in printed editions and in Mss. This sentence explains what is nāma, one of the sixteen constituent parts of Prajāpati, into which he divided himself in order to create the universe. But the subsequent sentences,—related to this subject which should form one single paragraph,—are removed to the third khaṇḍa. It is not right to truncate a paragraph by removing the commencing sentence to the preceding khaṇḍa and the remaining sentence which are incomplete by themselves to the following. The beginning sentence or paragraph of a khaṇḍa or chapter should any way be an undivided unit of idea. We have, therefore, taken the sentence नाम चक्षुरस्य तत् to its right place.

P. 60. L. 4.

सम्यक् (सेयमृक्?). Here the Brāhmaṇa says that in the beginning (of the universe) only *sat* and *asat* had existed. After identifying *sat* with Sāman, manas and prāṇa it compares a-sat with ṛk, vāk and apāna. Here the correct

reading should be सा ऋक्. The word सम्यक् must be a corrupt form of सेयमृक्.

P. 62. L. 5.

संभवावहा इति. The verb सं+√भू is normally used in *parasmaipada*. संभवतः, the reading found in MyLI is wrong in as much as it is in third person dual. It ought to be in first person dual to correspond with the subject आवाम्. The reading संभवावहा इति is probably a scribal error for संभवाव हेति.

P. 68. L. 2.

The readings here in the Mss as well as in P are corrupt. The legend narrates the seemingly deceitful behaviour of Kākṣaseni to whom Brahmadatta had gone beseaching for a sip of *Madhuparka*. The *purohita* of Kākṣaseni was seated beside him. But Kākṣaseni drank the exhilarating potion without inviting the *purohita*. The dismayed priest asked Kākṣaseni why he was so uncivil towards him. But Kākṣaseni, instead of giving a straight forward answer asks him a series of questions which ultimately dispels the dismal mode of the priest. The *purohita*, expressly approving of what Kākṣaseni did, नमस्ते भगवो विद्वानपा मधुपर्कम् says.

Now it may be seen that words and even passages might have been omitted after पिबसि इति. This becomes clear when we read the sentence:—अथ हेतरः पप्रच्छ । किंदेवत्यं साम वैयाघ्रपद्येति । यद्देवत्याः स्तुवत इति होवाच । तद्देवत्यमिति—,and observe the style of expression of these sentences. It appears that the word after पिबसि इति and before it and after होवाच are evidently lost in the course of transmission by the scribes. Consequently the sentences remained incomplete and became un-understandable. We have therefore, shown gap in the respective places.

Further साम वैयाघ्रपद्य which is the correct reading, is found only in the Ms I.

P. 81. L. 10.

यशस इति. P has corrected this as यशोऽसीति. This word could be separated from sandhi either as यशसः or as यशसे. If it is यशसः

it could be an adjective (nominal singular),—vide यशसं वीरवत्तमम् (Rv. 1. 1. 3)—, meaning famous. Here the reference is to *Ayāsya Āṇgirasa* who has been elected – वृत, by Sharyāta because he could perform miracles for others with his Sāmagāna, छन्दोभिरेव वाचा. By singing the sāman melodies he established gods in heaven, men in this world, manes in the world of manes and ultimately he succeeded to drive away the Asuras from this world by mere hiṅkāra. He, further, with mere recitation of Sāmans reached Sharyāta, the man, to the heaven,-छन्दोभिरेव वाचा शर्यातं मानवं स्वर्गं लोकं गमयांचकार।. Ayāsya was famous or reputed, यशसः, for all these (miracles), एतस्य सर्वस्य. Therefore, Sharyāta's choice rightly fell on Ayāsya.

If, however, we split the words यशसे इति from sandhi the phrase could mean 'for successful performance of all this.' We, however, prefer यशसः इति.

—L. 19.

P अलंभाव्यम् MyLI असंह्येयम्. The Brāhmaṇa says that the Asuras were thus defeated without a combat and expelled from this world with a mere hiṅkāra,—not even a full Sāmagāna, which normally consists of five or seven bhaktis or parts and hiṁkāra is just one of them. Therefore, the reading should be असंख्येयम् or more correctly असंख्येन. If however, असंख्येयम् could be emended as असंख्येयाः as an adjective of *Asuras* meaning the entire population of Asuras, it would be an equally suitable reading.

P. 82. L. 16.

The Mss. read only प्रेत्येति वाक् भूर्भुवः स्वरिति. But there should be इति after each व्याहृति to show them separately from each other. Further all these Mss have omitted उद्, the last व्याहृति, from the sentence. This is referred to later when explaining each of these syllables, as representing different things. Therefore, it is clear that the sentence should read:—प्रेत्येति वागिति भूर्भुवःसुवरिति उदिति. Again the word स्वर् should correctly be spelt only as सुवर् in the SV.

P. 86. L. 14.

L. आसेध्यति MyI आस्येय्येति P आस्ये धीयते. All these readings are not correct. The sentence आस्ये धीयते । तस्मादयास्यः of P or आसेध्यति । तस्मादयास्यः of L, does not conform to the usual style of the Brāhmaṇas where without the relative pronoun यत् a sub-clause is not connected with the main clause. The grammarians' rule यत्तदोर्नित्यः संबन्धः is liberally followed by the language of the Brāhmaṇas. Therefore, तस्मात् presupposes the existence of यत् in the previous sentence. What we have now in these Mss as also in P is the distorted text. आस्ये धीयते is unintelligible and also out of the context. The Brāhmaṇa has earlier narrated the legend in which it is said that the ṛṣi of the Āngirasa clan, known as Ayāsya, with mere power of his samagāna, had performed miracles including expelling the entire population of Asuras from this world and reaching Sharyata, a man, to heaven. "Since this ṛṣi performs the miracles with his mouth आसा i. e., words of mouth,—he is called Āsya. As he enjoys in the (power of) his mouth (i. e. words) he is indeed called Ayāsya." We have, therefore, reconstructed the text accordingly. The etymology of Ayāsya was given once before earlier where it is said that आस्य is called अयास्य in occult way, परोक्षमाचक्षते.

P. 88. L. 8.

My L. विद्यादेवता, P. विद्याद् [एता] देवता !

P probably assumed that विद्याद् देवता was wrongly written in Mss as विद्यादेवता. But there is no necessity of repeating देवता in this sentence again as the word is found in the immediately previous sentence. In similar circumstances on earlier occasions only the pronoun एताः is used referring to देवताः—vide एता मे देवताः.....करिष्यान्ति । एता अमुष्मिँल्लोके. Therefore, विद्यादेताः is the correct reading where the scribes probably inserted -व- after -दे- and created all this confusion. We have, therefore, amended the readings as विद्यात् । एताः.

P. 89. L. 8.

नानृताम्. The reading accepted by P is अनानृतः and is translated as "not being untruthful". But this epithet could more

appropriately be applied to the speech rather than to a speaker. The qualification of the speaker after य एवं वेद should be विद्वान्, an epithet frequently used by the Brāhmaṇa in such context. Further the word with three negatives looks too cumbersome even for the archaic language of a Brāhmaṇa. The word नानृता– on the other hand, just as नासत्या– is not uncommon and is normally used as an epithet of वाक्. Therefore, we have accepted the reading नानृताम् as an adjective of दैवीं वाचम् which is most appropriate in the context. Further the word एषो misguided Oertel to read नानृतां as अनानृता thinking that एषो is a form evolved by sandhi with अनानृतः. But एषो like एतेनो, अथो &c., is found in the Brāhmaṇas in places, even without an अ to follow e. g., एषो एवापि (3. 15. 5). This is probably formed with उ in this way: एषः उ > एष उ > एषो, a kind of double sandhi.

P. 93. L. 9.

P. निरमते, MyI. निरममीते, L.-निरमिते. P has taken निरमते as a verb and to justify this it has added सः in square brackets before हैतत्. Oertel has translated this altered passage thus: "It is then resting within man". But in fact अन्तर्निरमिते is the correct reading and is a compound word qualifying पुरुषे, meaning internally spent out i. e., utterly exhausted. The passage implies that when the wind does not move a man gets utterly exhausted and sits profusely sweating,—an every-day experience in tropical countries having sultry atmosphere.

Here अमिते is the past participle derived from the root $\sqrt{\overline{\text{am}}}$ to move, to go, with the primary suffix — ta inserted with infix -i- (vide रुष्यमत्वरसंघुषास्वानाम् Pā. 7. 2. 28.). निर+$\sqrt{}$अम् is used in this sense in the Śatapatha Brāhmaṇa as well.

P. 97. L. 1.

इयमेव. The Mss MyLI combine this with the previous paragraph and read both as a single paragraph as परिधानीयमेव स्तोत्रियः. But this should be corrected as परिधानीयेयमेव स्तोत्रियः. Oertel does give इयमेव before स्तोत्रियः, but in square brackets which indicates that the words were added by the editor.

P. 98. L. 1.

In P and MyLI the fourth anuvāka concludes with संप्रोतं स्यात्—and the fifth begins with एवं हैतस्मिन् an unusual and unwarranted conclusion and beginning for any chapter, with sentences split between two anuvākas. According to this unnatural bifurcation, the sub-clause has remained in one chapter and the main clause in another. We have, therefore, retained the whole sentence in the chapter itself. In MyLI there is a direction given to the reciters evidently by the teacher-priest in Tamil after प्रथमेऽनुवाके चतुर्थः. The sentence is *mūccu vīṭṭu grahikka* which literarily means *release the breath and take it in.* This direction is given to the reciters because the sentence begun is not completed and is carried over to the next anuvāka. The chanter stops just a while not longer than what is required for one breathing—before he resumes his recitation. This gap is only to indicate the end of a chapter and beginning of the other. Since the sentence is incomplete the reciter should not take more time lest what is said should be forgotten. *Mūccu viṭṭu grahikka*, thus means breathe and resume. This implies that no other formalities which are usually observed by the reciters when a chapter is concluded and also when a new one is begun, are to be followed. In short there should not be a break.

—L. 11.

After बहिष्पवमानमासाद्य MyLI add *mūccu viṭṭu* and again after कुर्यात् *mūccu grahikka* in Tamil. In these places P has *titra viyi* and *titra gṛhitra* instead. The sentence written in Tamil script means exhale and inhale evidently a direction given by the priests to the reciters. P has taken it as part of the Brāhmaṇa and a quotation without understanding what it meant. The sentence in P is corrupt. It is clear that the priests have realized a gap in the expression after आसाद्य as also after कुर्यात्. It is also evident that a number of words are omitted from this passage. Similarly before वाचा there must have been a verb meaning 'he should wish to speak' as is evident from corresponding sentences दिदृक्षेतैवाक्षिभ्याम् and शुश्रूषेतैव कर्णाभ्याम्, that immediately follow.

Maybe after आसाद्य some ritual formula is referred to or some secret utterances are pronounced which are known only to the priests. The concluding sentence स्वयमिदं मनोयुक्तं– "this is of itself kept in mind"—supports what we presume. We have however left spaces blank and added विवक्षेतैव in square brackets before वाचा. The expression yet remains obscure.

P. 101. L. 19.

The passages from स होवाच....रेतो भूतं सिञ्चति are included in the third khaṇḍa and the fourth begins with तत् प्रथमं म्रियते. We have, however, changed this arbitrary division of khaṇḍas and concluded the third khaṇḍa at अनूतस्थौ where the current topic also concludes. The next sentence with a separate topic is carried over to the following khaṇḍa, instead of splitting the paragraph at wrong sequence and distributing it to two different khaṇḍas. This truncation, whether of a sentence or of a paragraph, regardless of the continuity of idea expressed therein, is illogical and unwarranted.

P. 108. L. 6.

P MyLI स्वर्ग्यं (My स्वर्गं) स्वरगाम्. The word स्वर् is correctly spelt in this sentence as सुवर् while स्वर्गं as सुवर्गं only in the following. *svar*, and *svarga* are the contracted forms which were, strictly speaking, not in vogue in the old Vedic language. It may be seen that the same words are spelt in different ways in the succeeding sentences which clearly establishes the fact that the text was freely meddled with by scribes. We have, therefore accepted सुवः and सुवर्गम् as the standard spellings for these terms in both the places.

P. 110 L. 20.

See CN. above.

P. 116. L. 14.

In the printed editions and Mss. तमाह प्र मा वहेति is included in the first khaṇḍa and the second khaṇḍa begins with किमभीति. We have overlooked this arbitrary break up of the paragraph and brought down the sentence तमाह प्र मा वहेति to its right place i.e., to the beginning of second khaṇḍa.

We have done this in khaṇḍas 2, 3, 4, 5, 6, 7 and 8 since all of these have the same sentence at the end which should naturally go to the following khaṇḍa where it has its due place.

P. 126. L. 1.

The text of the paragraph 3 is corrupt in MYLI as also in printed editions. P. reads: स ह तथैव पल्ययमानः श्मशाने वा वने वावृती-शयानमुपधावयांचकार । तं ह चायमानः प्रजहौ । and MyIL. स ह तथैव पल्ययमानः श्मश्रूणां साधने उपव्रती(°वृति MyI.)शयानमुपधावयांचकार । तं ह जाया (छाया L.) न प्रजहौ ।

The Brāhmaṇa narrates the story of Keshin Dārbhya, the king of Pāñcālas, who was the nephew of Uccaishravas Kaupayeya, the king of Kurus. Bereaved of the death of his loving uncle, Keshin Dārbhya goes a hunting in a forest where he meets his uncle who manifests himself before him. Instructed by his uncle to perform a sacrifice in which the asharīra sāman was to be sung properly, he wandered among the Kurus and Pāñcālas in search of a chanter knowing this sāman and then ultimately in his search ran across a person lying in the *āvṛti* in a crematory. Here the passage is obscure and corrupt. It is not clear whether the person lying in the *shmashāna* was dead or alive and the person who spoke to him was like his uncle, appeared before him in his *sūkṣmasharīra*, subtle body. तं ह छाया न प्रजहौ may mean that though the person was dead and his body was burnt, yet his shadow had not left the body consumed by fire and lying in the form of ashes and covered. And if we accept जाया in place of छाया it may mean that the person practising penance within the enclosure in the *shamshāna*, —a dreadful place for any, much more so for a woman,—yet his faithful wife did not desert him. The tāntriks and the followers of some obscure cults do resort to crematories for meditation and for performance of secret rites with a view to acquire occult power. The word *sādhana*, supports this assumption, which means a place to practise such occult rites. Or it may also mean that though the person was dead and his body was reduced to ashes yet the person was seen lying within the enclosure where the body was set to fire in the *shmashāna*, and his mourning wife sitting

there by him. This obscure person in reply tells his name as Prātṛda Bhalla and agrees to sing the *asharīra sāman* for Keshin Dārbhya in his proposed Dvādashāha sacrifice. Keshin Dārbhya invites him much to the jealousy and envy of the Brahmins of Kuru and Pāñcālā of noble descent—kulya. They questioned his suitability for any work (कस्मा अयमलम्?) much less for a complicated (व्यूढच्छन्दस्) Dvādashāha. The reply from Keshin was अलं न्वै मह्यं....सैवालं.... Here सैवालम् evidently refers to छाया in which case the person dead was yet lying with his sūkṣmasharīra, sebtle body, in the enclosure where his body was set to fire, as it was the place of sādhana. We have therefore preferred छाया to जाया and amended the text as given in our edition. Again the sentences अलं न्वै मह्यं.... are corrupt and the meaning is obscure and doubtful. It is impossible to correct these passages like many others in this work unless some good Mss are unearthed.

P. 140. L. 2.

P reads त्र्यायुषं but in MyL it is त्रियायुषं which we have accepted and which sets the metre correct. The fourth pāda also must read त्रीणि आयूंषि मेऽकृणोः if the metre, which is anuṣṭup should not be defective.

# INDEX

Words from compound are separated and listed in their alphabetical sequence along with other words. The hyphen at the end, beginning or at both the ends of a word indicates the position of a word in the compound. Technical terms and proper nouns are not split. Words from quotations in the text and proper names are printed in bold type. References are to page numbers.

### अ

## आ

## इ

## ई



## उ

## ए

## ऐ



## ओ

## औ



## क

## ख



## ग

## ज

## प

## ब

## म

## य

## र

## ल

## श

## ष

## स

## ह